SERIES.

No. LV.

श्रीमहेन्द्रविक्रमवर्मप्रणीतं

# मत्तविलासप्रहसनम् ।

THE

# MATTAVILÂSAPRAHASANA

OF

SRÎ MAHENDRAVIKRAMAVARMAN

EDITED BY

T. GANAPATI SÂSTRÎ

*Curator of the Department for the publication of Sanskrit Manuscripts, Trivandrum.*

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HIS HIGHNESS THE MAHARAJAH OF TRAVANCORE



TRIVANDRUM:

PRINTED BY [illegible] NDENT.

1907

TRIVANDRUM SANSKRIT SERIES.

No. LV.



# THE MATTAVILÂSAPRAHASANA

OF

## SRÎ MAHENDRAVIKRAMAVARMAN

EDITED BY

T. GANAPATI SÂSTRÎ

*Curator of the Department for the publication of Sanskrit Manuscripts, Trivandrum.*

---

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HIS HIGHNESS THE MAHARAJAH OF TRAVANCORE

---

TRIVANDRUM:
PRINTED BY THE SUPERINTENDENT, GOVERNMENT PRESS
1917

अनन्तशयनसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ५५.

# मत्तविलासप्रहसनं

श्रीमहेन्द्रविक्रमवर्मप्रणीतम् ।

संस्कृतग्रन्थप्रकाशनकार्याध्यक्षेण
त. गणपतिशास्त्रिणा
संशोधितम् ।

---

तच्च
अनन्तशयने
महामहिमश्रीमूलकरामवर्मकुलशेखरमहाराजशासनेन
राजकीयमुद्रणयन्त्रालये तदध्यक्षेण
मुद्रयित्वा प्रकाशितम् ।

---

कोळम्बाब्दाः १०९२, क्रैस्ताब्दाः १९१७.

# PREFACE.

The drunken revelry of a Kâpâlika with his female companion, his falling out with a hypocritical Sâkyabhikshu believing him to have stolen his Kapâla (alms-bowl) which had been carried away by a dog, his having recourse to a degenerate Pâsupata for the settlement of disputes and finally the recovery of the Kapâla from a madman are in brief the incidents that make up the plot of the Prahasana. The style is simple and beautiful and is suited to the humorous character of the play.

It is evident from the Sthâpanâ of the play that it was written by a King of the Pallava dynasty named Mahendravikrama Varma, son of Simha Vishnu Varma. This Mahendravikrama Varma can be identified with the Mahendra Varman I, mentioned in a number of South Indian Pallava inscriptions as the son and successor of the early Pallava King Simhavishnu (575–600 A. D.) and as having borne a number of titles. For, we know from the Mahendra-Vâdi Inscription that Gunabhara built a cave temple 'Murâri griha',* and from the Vallam Inscription that Gunabhara is known by the name "Mahendra Potarayan". The two cave inscriptions at Trichinopoly‡ disclose that Gunabhara was a Pallava King and had the title Satrumalla. Rao Bahadur Venkayya M. A. in his article "Inscriptions in the Trichinopoly cave" contributed to the Director General's Archaeological Survey Annual for 1903–04 (pp. 270 ff.) gives the contents of a damaged inscription which consist of the titles Mahendravikrama, Mattavilâsa and Avanibhâjana which were held by Gunabhara. Of these titles held by one and the same person, Mahendravikrama evidently seems to be his own name, and Gunabhara and others his titles. Mahendra is a shortened form of Mahendravikrama Varma. The title Satrumalla might

* Vide Epigraphia Indica Vol IV. p 152. ‡ See South Indian Inscriptions Vol. I pp. 29-30

have been obtained by him on account of his valour in vanquishing enemies, which is mentioned in the concluding line of the play 'राजन्वानस्तु शक्तिप्रशमितरिपुणा शत्रुमल्लेन लोकः'। The title Avanibhâjana is referred to in the 4th Pâda of the Mangala Sloka 'स व्यासावनिभाजनं दिशतु वो दिव्यः कपाली यशः' and the titles Gunabhara and Mattavilâsa are also found in the words of Natî in the Sthâpanâ 'जोव्वणगुणभरमत्तविळासप्पहसणं'. The title Gunabhara might have been given to him as he was the seat of all the virtues described in the verse 'प्रज्ञादानदयानुभावधृतयः कान्तिः क्षमा कौशलम्'(p. 3.). It is probably on account of the term Avanibhâjana happily employed in the line 'स व्यासावनिभाजनं दिशतु वो दिव्यः कपाली यशः' so as to suggest the central incident of the plot namely 'the handing over the vessel', that the author was known by the title Avanibhâjana. Similarly the title Mattavilâsa might have been conferred on him as it was aptly placed in the sentence 'जोव्वणगुणभरमत्तविळास' to suggest the name of the play also.

The author Mahendravikrama Varma flourished in the early part of the 7th century A. D., as he is known to be a contemporary of Chalukya Pulakesin II. who came to the throne on 609 A. D.

My thanks are due to Rao Bahadur H. Krishna Sastri B. A., Officiating Epigraphist for the Government of India, for helping me with references to inscriptions relating to Mahendra Varman I.

The edition of this work is based on two palm-leaf manuscripts in Malayalam characters, about three centuries old. *One of them was obtained by me from the Manalikkara Mathom in South Travancore in the year 1909, and the other manuscript from Mr. Nilakanthan Chakyar of Manganam in North Travancore in the year 1914.

Trivandrum,
18th May 1917.

T. GANAPATI SÂSTRÎ.

A transcript of the manuscript was sent some six months ago, at his request to Mr. T. A. Gopinatha Rao, M. A. Superintendent of Archeology Travancore, and he has published an article on the work "Matta-Prahasana" in the Madras Christian College Magazine.

# उपोद्घातः ।

युवतिसमेतस्य कस्यापि कापालिकस्य मधुपानविभ्रमः, कुक्कुरापहृतमात्मीयं कपालभाजनं केनचिन्मिथ्याचारेण शाक्यभिक्षुणा चोरितं मन्यमानस्य तेन सह विवादः, विवादनिर्णयाय पाशुपतापशदाश्रयणम्, उन्मत्तसकाशादन्ते यदृच्छया कपाललाभ इत्येतावद् वस्तु हास्यरसानुगुणं निपुणरमणीयमिह प्रहसने वर्णितम् ।

अस्य प्रणेता पल्लवभूपालकुलजन्मा **सिंहविष्णुवर्मसूनुर्महेन्द्रविक्रमवर्मेति** स्थापनायां प्रतिपादितम् । कोऽसौ **महेन्द्रविक्रमवर्मेति** वीक्षायां, पल्लवेषु भूपतिषु वृद्धतरस्य **सिंहविष्णुवर्मणः** पुत्रो बहुबिरुदशाली **यो महेन्द्रवर्मा** नाम दक्षिणभारतप्राचीनलेखेभ्योऽवगतः स एवायमिति निश्चयः । तथाहि — एपिग्राफियाइन्दिकायां *महेन्द्रवाडिशिलालेखे मुरारिगृहनिर्मापयिता **गुणभरो** नामाभिहितः । तस्यामेव (वल्लं) शिलालेखे **गुणभर एव** 'महेन्द्रपोतरयन्' इति **महेन्द्र**संज्ञया निर्दिष्टः । **त्रिशिरःपुर**शिलालेखयोः †द्वयोः एकत्र **गुणभर** एव पल्लवो राजेति, अन्यत्र **गुणभरो** राजा शत्रुमल्ल इति च कीर्तितः । भारतवर्षपुराणवस्तुविचाराध्यक्षस्य १९०३–०४तमवर्षवृत्तनिवेदनायां (pp. 270. ff.) प्रकाशिते **त्रिशिरःपुर**शिलालेखविषये स्वनिबन्धे श्रीवेङ्कय्यमहाशयो(एम्. ए.) **गुणभरस्यैव महेन्द्रविक्रम** इति **मत्तविलास** इति **अवनिभाजनम्** इति चाख्यान्तराणि क्वचन शिलालेखे दृष्टान्याह । एकव्यक्तिनिवेशिनीषु आसु **गुणभरा**द्याख्यासु औचित्याद् **महेन्द्रविक्रम** इति सांस्कारिकी संज्ञा, **गुणभर** इत्येवमादीनि तु बिरुदानि; **महेन्द्र** इति च नामैकदेशग्रहणमिति शक्यमवसातुम्§ । नूनं, बिरुदेष्वेतेषु

---

* See page 152 Vol. 4. † See South Indian Inscriptions Vol. I. pp. 29–30.

§ अन्यान्यपि तु बिरुदानि अस्यावगतानि पुरुषोत्तम, सत्यसन्ध, ललिताङ्कुर, पकापिडुगु, [illegible], इत्यादीनि । तत्र चट्टकारीति चैत्यकारीत्यर्थकं शिलोच्चयेषु देवायतननिर्माणस्य दक्षिणभारते महेन्द्रवर्मोपक्रमतां सूचयतीति भारतमण्डलप्राचीनलेखाधिकृतः श्रीकृष्णशास्त्रिमहाशय आह ।

शत्रुमल्ल इत्येतत् शत्रुधर्षणशक्त्यतिशयात् सिद्धम्। उच्चास्मत्प्रहसने 'राजन्वानस्तु शक्तिप्रशमितरिपुणा शत्रुमल्लेन लोकः' इति भरतवाक्यश्लोकपादे गृहीतमेव। **अवनिभाजन - गुणभर - मत्तविलास**विरुदानि तु 'स व्यात्तावनिभाजनं दिशतु वो दिव्यः कपाली यशः' इति मङ्गलश्लोके, 'जोव्वणगुणभरमत्तविलासप्पहसणं' इति नटीवाक्ये चोपात्तानि। तत्रापि **गुणभर**विरुदम् उच्चावचसद्गुणातिशययोगान्नूनं निष्पन्नम्। स च सद्गुणातिशययोगः 'प्रज्ञादानदयानुभावधृतयः' (श्लो० ३) इत्यादिना प्रकाशित एव। प्रहसनवस्तुभूतकपालरूपभाजनदानसूचनानुगुण्येन अवनिभाजनशब्दस्य यच्चमत्कारकारि संघटनं, तन्निबन्धनः संघटयितरि कवौ अवनिभाजनपदव्यपदेशो विदग्धैर्मन्ये प्रवर्तितः। एवं मत्तविलासपदव्यपदेशोऽपि तत्पदसंघटननिबन्धनः, अर्थान्तरपरेण तेन पदेन प्रहसननामधेयस्य मुद्रालङ्कारभङ्ग्या संसूचनात्।

**महेन्द्रविक्रमवर्मणो** जीवितसमयस्तु क्रैस्ताब्दीयस्य षष्ठशतकस्य पूर्वो भागः, यस्मात् स मद्रमण्डलपुराणवस्तुविमर्शकैः ६०९तम क्रैस्ताब्दावाप्तराज्याधिपत्यस्य चालुक्यस्य द्वितीयपुलकेशिनः समकालिको निर्णीतः।

अस्य प्रहसनस्य संशोधनाधारभूतौ केरलग्रन्थलिपी तालपत्रात्मकौ त्रिचतुरशतवर्षवृद्धौ द्वावादर्शौ। तत्रैकः १९०९तमे क्रैस्ताब्दे मणलिक्करमठान्मयोपलब्धः, द्वितीयः १९१४तमे (माङ्गानम्) नीलकण्ठचाक्यार्महाशयसकाशादासादितः॥

अनन्तशयनम्, १४-५-१९१७.

त. गणपतिशास्त्री.

॥ श्रीः ॥

# मत्तविलासप्रहसनं

श्रीमहेन्द्रविक्रमवर्मप्रणीतम् ।

---

(नान्द्यन्ते ततः प्रविशति सूत्रधारः ।)

**सूत्रधारः—**

भाषावेषवपुःक्रियागुणकृतानाश्रित्य भेदान् गतं
भावावेशवशादनेकरसतां त्रैलोक्ययात्रामयम् ।
नृत्तं निष्प्रतिबद्धबोधमहिमा यः* प्रेक्षकश्च स्वयं
स व्यातावनिभाजनं दिशतु वो दिव्यः कपाली यशः ॥

भोः! समासादितः खलु मया यवीयसीं भार्यामधिकृत्य समुत्पन्नव्यलीकायां ज्येष्ठायां मे कुटुम्बिन्यां युक्ततरः प्रसादनोपायः, यच्चिरस्याद्य वयं प्रेक्षाधिकारे परिषदा नियुक्ताः स्मः । तद् यावदेनामुपसर्पामि । (नेपथ्याभिमुखमवलोक्य) आर्ये! इतस्तावत् ।

(प्रविश्य)

**नटी—** (सरोषम्) (क) अय्य! किं चिरस्स काळस्स जोव्वणगुणभरमत्तविळासप्पहसणं (ओ ? दं)सेदुं आअदो सि ।

---

(क) आर्य! किं चिरस्य कालस्य यौ[illegible]वनगुणभर[illegible]विलासप्रहसनं दर्शयितुमागतोऽसि ।

---

* करोतीत्यध्याहर्तव्यम ।

सूत्रधारः — यथाह भवती ।

नटी — (क) ताए एव दाव दंसेहि, जा तुए रमइदव्वा ।

सूत्रधारः — त्वया सह दर्शयिष्यामीति ।

नटी — (ख) किं ताए एव्व णिउत्तो सि ।

सूत्रधारः — एवमेतत् । अपिच, तत्र गता महान्तमनुग्रहं लप्स्यसे ।

नटी — (ग) तव एव्व खु एदं जुज्जइ ।

सूत्रधारः — भवति ! किमिव न युज्यते । त्वत्प्रयोगपरितोषिता परिषदनुग्रहीष्यतीति ।

नटी — (सहर्षम्) (घ) एवं । लद्धो अय्यमिस्साणं पसादो ।

सूत्रधारः — बाढम् । लब्धः ।

नटी — (ङ) जइ एवं, किं दे पिअक्खाणिअं देमि ।

सूत्रधारः — अलं प्रियाख्यानिकपुनरुक्तेन । पश्य,

उद्भिन्नरोमाञ्चकपोलरेख-
मामाविर्मयूखस्मितमञ्चितभ्रु ।

---

(क) तयैव तावद् दर्शय, या त्वया रमयितव्या ।

(ख) किं तयैव नियुक्तोऽसि ।

(ग) तवैव खल्वेतद् युज्य[illegible] ।

(घ) ए[illegible] लब्ध आर्य[illegible] प्रसादः ।

(ङ) य[illegible]व, किं [illegible]ददामि ।

लब्ध्वा प्रिये! दुर्लभमाननं ते
भूयोऽपि किं प्रार्थयितव्यमस्ति ॥ २ ॥

**नटी** — (क) किं दाणि अय्येण पउज्जिदव्वं ।

**सूत्रधारः** — ननु त्वयैवाभिहितं मत्तविलासप्रहसनमिति ।

**नटी** — (ख) णूणं इमस्सिं पक्खवादी मे कोवो, जेण अभिप्पाआणुरूवं भणाविद ह्मि । अय्य! कदमो उण सो कवी, जो इमाए किदीए पआसीअदि ।

**सूत्रधारः** — भवति! श्रूयताम् । पल्लवकुलधरणिमण्डलकुलपर्वतस्य सर्वनयविजितसमस्तसामन्तमण्डलस्य आखण्डलसमपराक्रमश्रियः श्रीमहिमानुरूपदानविभूतिपरिभूतराजराजस्य श्रीसिंहविष्णुवर्मणः पुत्रः शत्रुषड्वर्गनिग्रहपरः परहितपरतन्त्रतया महाभूतसधर्मा महाराजः श्रीमहेन्द्रविक्रमवर्मा नाम । अपिच,

प्रज्ञादानदयानुभावधृतयः कान्तिः कलाकौशलं
सत्यं शौर्यममायता विनय इत्येवम्प्रकारा गुणाः ।
अप्राप्तस्थितयः समेत्य शरणं याता यमेकं कलौ
कल्पान्ते जगदादिमादिपुरुषं सर्गप्रभेदा इव ॥ ३ ॥

---

(क) किमिदानीमार्येण प्रयोक्तव्यम् ।

(ख) नूनमस्मिन् पक्षपाती मे कोपः, येनाभिप्रायानुरूपं भाणितास्मि । आर्य! कतमः पुनः स कविः, योऽनया कृत्या प्रकाश्यते ।

---

१. 'गदं भ' ख. पाठ

किञ्च,

आकरे सूक्तिरत्नानां यस्मिन् गुणगरीयसाम् ।
*अर्घन्ति बहु सूक्तानि सतां सारलघून्यपि ॥ ४ ॥

नटी — (क) किं दाणि अय्येण विळम्बीआदि । णं अपुरुवदाए तुरिअं अणुट्ठिदव्वो अअं पओओ ।

सूत्रधारः — अहं तु,

सम्प्रति सङ्गीतधनः
कविगुणकथयास्मि निघ्नतां नीतः ।

(नेपथ्ये)

प्रिये! देवसोमे!

सूत्रधारः —

युवतिसख एष सुरया
कपालविभवः कपालीव ॥ ५ ॥

(निष्क्रान्तौ ।)

स्थापना ।

---

(क) किमिदानीमार्येण विलम्ब्यते । नन्वपूर्वतया त्वरितमनुष्ठातव्योऽयं प्रयोगः ।

---

* अर्घति मूल्यप्राप्त्यर्थको धातुः । बहु इति क्रियाविशेषणम् । बहु अर्घन्ति बहु मूल्यं प्राप्नुवन्ति [illegible] लभन्त इति यावत् । यः स्वयं गुणोत्तरसूक्तिरत्ननिधिः सन् परकीयसूक्तान्यल्पगुणान्यपि नावमन्यते, प्रत्युत श्लाघत एव केवल[illegible] तात्पर्यम् । यस्मिन्निति वैषयिके सामीपिके वाधिकरणे सप्तमी ।

(ततः प्रविशति सपरिग्रहः कपाली ।)

कपाली — (क्षीवतां रूपयित्वा) प्रिये ! देवसोमे ! सत्यमेवैतत् — तपसा कामरूपता प्राप्यत इति । यत् त्वया परमव्रतस्य विधिवदनुष्ठानेनान्य एव रूपातिशयः क्षणात् प्रतिपन्नः । तव हि,

उद्भिन्नश्रमवारिबिन्दु वदनं सभ्रूलताविभ्रमं
खेलं यातमकारणानि हसितान्यव्यक्तवर्णं गिरः ।
रागाक्रान्तमधीरतारमलसापाङ्गं युगं नेत्रयो-
रंसोपान्तविलम्बिनश्च विगलन्मालागुणा मूर्धजाः ॥ ६ ॥

देवसोमा — (क) भअवं ! मत्तं विअ मत्तं विअ म भणासि ।

कपाली — किमाह भवती ।

देवसोमा — (ख) ण हु किञ्चि भणामि ।

कपाली — किन्नुखलु मत्तोऽस्मि ।

देवसोमा — (ग) भअवं ! परिब्भमइ परिब्भमइ पुहुवी । पुरो वदामि विअ । अवलम्ब दाणि मं ।

कपाली — प्रिये ! तथास्तु । (अवलम्बमानः पतनं रूपयित्वा)

---

(क) भगवन् ! मत्तामिव मत्तामिव मां भणसि ।

(ख) न खलु किञ्चिद् भणामि ।

(ग) भगवन् ! परिभ्रमति परिभ्रमति पृथिवी । पुरः पतामीव । अवलम्बस्वेदानीं माम् ।

प्रिये! सोमदेवे! किं त्वं कुपितासि, यदवलम्बितुमुपसर्पतो मे दूरीभवसि ।

देवसोमा —(क) अहोणुखु आअदकोवा सोमदेवा, जा तुए सीसेण पणामिअ अणुणीअमाणा वि दूरीहोइ ।

कपाली —ननु त्वमेवासि. सोमदेवा । (ध्यात्वा) नहि, देवसोमा ।

देवसोमा —(ख) भअवं! णं तहा वल्लहा सोमदेवा, णार्हदि मम णामकेणाभिधादुं ।

कपाली —भवति! सुलभपदस्खलितो मे मदोऽयं तवा, त्रापराद्धः ।

देवसोमा—(ग) दिट्ठिआ ण तुवं ।

कपाली —कथं मद्यदोषो मामेवं सङ्क्रामयति । भवतु भवतु । अद्यप्रभृति मद्यनिषेवणान्निवृत्तोऽस्मि ।

देवसोमा —(घ) भअवं! मा मा मम कारणादो वदभङ्गेण तवो खण्डेदुं । (पादयोः पतति ।)

---

(क) अहोनुखल्वागतकोपा सोमदेवा, या त्वया शीर्षेण प्रणम्यानुनीयमानापि दूरीभवति ।

(ख) भगवन्! ननु तथा [illegible] सोमदेवा, नार्हति मम नामकेनाभिधातुम् ।

(ग) [illegible]या न त्वम् ।

(घ) [illegible] मा मा [illegible] व्रतभङ्गेन तप [illegible]यितुम् ।

कपाली — (सहर्षमुत्थाप्यालिङ्ग्य) धूर्ण धूर्ण नमः शिवाय । प्रिये!

पेया सुरा प्रियतमामुखमीक्षितव्यं
ग्राह्यः स्वभावललितो विकृतश्च वेषः ।
येनेदमीदृशमदृश्यत मोक्षवर्त्म
दीर्घायुरस्तु भगवान् स पिनाकपाणिः ॥ ७ ॥

देवसोमा — (क) भअवं! णं तहा भणिदव्वं । अघन्ते मोक्खमग्गं अण्णहा वण्णअन्ति ।

कपाली — भद्रे! ते खलु मिथ्यादृष्टयः । कुतः,

कार्यस्य निःसंशयमात्महेतोः
सरूपतां हेतुभिरभ्युपेत्य ।
दुःखस्य कार्यं सुखमामनन्तः
स्वेनैव वाक्येन हता वराकाः ॥ ८ ॥

देवसोमा — (ख) सन्तं सन्तं पावं ।

कपाली — शान्तं शान्तं पापम् । नखलु ते पापा आक्षेपमुखेनाप्यभिधातुमर्हन्ति, ये ब्रह्मचर्य-केशनिर्लोटन-मलधारण-भोजनवेलानियम-मलिनपटपरिधानादिभिः प्राणिनः परिक्लेशयन्ति । तदिदानीं कुतीर्थसङ्कीर्तनोपहतां जिह्वां सुरया प्रक्षालयितुमिच्छामि ।

---

(क) भगवन्! ननु तथा भणितव्यम् । अर्हन्तो मोक्षमार्गमन्यथा वर्णयन्ति ।

(ख) शान्तं शान्तं पापम् ।

**देवसोमा**—(क) तेण हि अण्णं दाणिं सुरापणं गच्छामो ।

**कपाली**—प्रिये! तथास्तु।

(उभौ परिक्रामतः।)

**कपाली**—अहोतुखलु विमानशिखरविश्रान्तघनरासितसन्दिग्धमृदङ्गशब्दस्य मधुसमयनिर्माणमातृकायमाणमाल्यापणस्य कुसुमशरविजयघोषणायमानवरयुवतिकाञ्चीरवस्य काञ्चीपुरस्य परा विभूतिः। अपिच,

अनतिशयमनन्तं सौख्यमप्रत्यनीकं
समधिगतसतत्त्वा मेनिरे यन्मुनीन्द्राः ।
तदिह निरवशेषं दृष्टमेतत् तु चित्रं
यदुत करणभोग्यं कामभोगात्मकं च ॥ ९ ॥

**देवसोमा**—(ख) भअवं! भअवदी वारुणी विअ अणवगीअमहुरा कञ्ची ।

**कपाली**—प्रिये! पश्य पश्य। एष सुरापणो यज्ञवाटविभूतिमनुकरोति । अत्र हि ध्वजस्तम्भो यूपः, सुरा सोमः, शौण्डा ऋत्विजः, चषकाश्चमसाः, शूल्यमांसप्रभृतय उपदंशा हविर्विशेषाः, मत्तवचनानि यजूंषि, गीतानि सामानि, उदङ्काः स्रुवाः, तर्षोऽग्निः, सुरापणाधिपतिर्यजमानः ।

---

(क) तेन [illegible] सुरापणं गच्छावः।

(ख) भगवन् भगवती वारुणीवानवगीतमधुरा काञ्ची ।

देवसोमा — (क) अह्माअं पि एत्थ भिक्खा रुद्दभाओ भविस्सदि ।

कपाली — अहो दर्शनीयानि प्रहतमर्दळकरगानुगतानि विविधाङ्गहारवचनभ्रूविकाराणि उच्छ्रितैकहस्तावलम्बितोत्तरीयाणि विगलितवसनप्रतिसमाधानक्षणविषमितलयानि व्याकुलितकण्ठगुणानि मत्तविलासनृत्तानि ।

देवसोमा — (ख) अहो रसिओ खु आअय्यो ।

कपाली — एषा भगवती वारुणी चषकेष्वावर्जिता प्रत्यादेशो मण्डनानाम्, अनुनयः प्रणयकुपितानां, पराक्रमो यौवनस्य, जीवितं विभ्रमाणाम् । किं बहुना,

मिथ्या त्रिलोचनविलोचनपावकेन
भस्मीकृतां मदनमूर्तिमुदाहरन्ति ।
स्नेहात्मिका तदभितापवशाद् विलीना
सेयं प्रिये! मदयति प्रसभं मनांसि ॥ १० ॥

देवसोमा — (ग) भअवं! जुज्जइ एदं । णहि ळोओवआरणिरदो ळोअणाहो ळोअं विणासेदि ।

(उभौ कपोलपटहं कुरुतः ।)

---

(क) आवयोरप्यत्र भिक्षा रुद्रभागो भविष्यति ।

(ख) अहो रसिकः खल्वाचार्यः ।

(ग) भगवन्! युज्यत एतत् । नहि लोकोपकारनिरतो लोकनाथो लोकं विनाशयति ।

**कपाली** — भवति ! भिक्षां देहि ।

(नेपथ्ये)

(क) भअवं ! एसा भिक्खा । पडिगण्हदु भअवं ।

**कपाली** — एष प्रतिगृह्णामि । प्रिये ! क्व मे कपालम् ।

**देवसोमा** — (ख) अहं वि ण पेक्खामि ।

**कपाली** — (ध्यात्वा) आ, तस्मिन्नेव सुरापणे विस्मृतमिति तर्कयामि । भवतु, प्रतिनिवृत्य द्रक्ष्यावः ।

**देवसोमा** — (ग) भअवं ! अधम्मो खु एसो आदरोवणीदाए भिक्खाए अप्पडिग्गहो । किं दाणि करम्ह ।

**कपाली** — आपद्धर्मं प्रमाणीकृत्य गोशृङ्गेण प्रतिगृह्यताम् ।

**देवसोमा** — (घ) भअवं ! तह । (प्रतिगृह्णाति ।)

(उभौ परिक्रम्यावलोकयतः ।)

**कपाली** — कथमिहापि न दृश्यते । (विषादं रूपयित्वा) भो भो माहेश्वराः ! माहेश्वराः ! अस्मदीयं भिक्षाभाजनमिह भवद्भिः किं दृष्टम् । किमाहुर्भवन्तः — नखलु वयं

---

(क) भगवन् ! एषा भिक्षा । प्रतिगृह्णातु भगवान् ।

(ख) अहमपि न पश्यामि ।

(ग) भगवन् ! अधर्मः खल्वेष आदरोपनीताया भिक्षाया अप्रतिग्रहः । किमिदानीं कुर्वः ।

(घ) भगवन् ! तथा ।

पश्याम इति। हा हतोऽस्मि। भ्रष्टं मे तपः। केनाहमिदानीं कपाली भविष्यामि। भोः! कष्टम्।

येन मम पानभोजन-
शयनेषु नितान्तमुपकृतं शुचिना।
तस्याद्य मां वियोगः
सन्मित्रस्येव पीडयति ॥ ११ ॥

(पतितः शिरस्ताडनं रूपयित्वा) भवतु। अस्ति लक्षणमात्रम्। न मुक्तोऽस्मि कपालिसंज्ञायाः। (उत्तिष्ठति।)

देवसोमा — (क) भअवं! केण खु गहीदं कवालं।

कपाली — प्रिये! तर्कयामि शूल्यमांसगर्भत्वाच्छुना वा शाक्यभिक्षुणा वेति।

देवसोमा— (ख) तेण हि अण्णेसणणिमित्तं सव्वं कञ्चीउरं परिब्भमामो।

कपाली — प्रिये! तथा।

(उभौ परिक्रामतः।)

(ततः प्रविशति शाक्यभिक्षुः पात्रहस्तः।)

शाक्यभिक्षुः — (ग) अहो उवासअस्स धणदाससेट्ठिणो सव्वावासमहादाणमहिमाणो, जहिं मए अभिमदव-

(क) भगवन्! केन खलु गृहीतं कपालम्।

(ख) तेन ह्यन्वेषणनिमित्तं सर्वं काञ्चीपुरं परिभ्रमावः।

(ग) अहो उपासकस्य धनदासश्रेष्ठिनः सर्वावासमहादानमहिमा, यस्मिन् मयाभिमतवर्णगन्धरसो मत्स्यमांसप्रकारबहुलोऽयं पिण्डपातः प-

१. 'इया।' ख. पाठः. २. 'ध' क. पाठः.

णगन्धरसो मच्छमंसप्पआरबहुळो अअं पिण्डवादो समासादिदो । जाव दाणि राअविहारं एव्व गच्छामि । (परिक्रम्य आत्मगतम्) भोः ! परमकारुणिएण भअवदा तहागएण पासादेसु वासो, सुविहि(अ)सय्येसु पज्जङ्केसु सअणं, पुव्वण्हे भोअणं, अवरण्हे सुरसाणि पाणआणि, पञ्चसुग(न्धव्वो ? न्धोव)हिअं तम्बोळ्ळं, सण्हवसणपरिधाणं ति एदेहि उवदेसेहि भिक्खुसङ्घस्स अणुग्गहं करन्तेण किण्णुहु इत्थिआपरिग्गहो सुरावाणविहाणं च ण दिट्ठं । अहव कहं सव्वञ्ञो एदं ण पेक्खदि । अवस्सं एदेहि दुट्ठबुड्ढत्थविरेहि णिरुच्छाएहि अह्माणं तरुणजणाणं मच्छरेण पिडअपुत्थएसु इत्थिआसुरावाणविहाणाणि[2] पळामिट्ठाणि त्ति तक्केमि । कहिंणुहु अविणट्ठमूळपाठं समासादएअं । तदो सम्पुण्णं बुद्धवअणं ळोए पआसअन्तो सङ्घोवआरं करिस्सं । (परिक्रामति ।)

---

मासादितः । यावदिदानीं राजविहारमेव गच्छामि । भोः! परमकारुणिकेन भगवता तथागतेन प्रासादेषु वासः, सुविहितशय्येषु पर्यङ्केषु शयनं, पूर्वाह्णे भोजनम्, अपराह्णे सुरसानि पानकानि, पञ्चसुगन्धोपहितं ताम्बूलं, श्लक्ष्णवसनपरिधानमित्येतैरुपदेशैर्भिक्षुसङ्घस्यानुग्रहं कुर्वता किन्नुखलु स्त्रीपरिग्रहः सुरापानविधानं च न दृष्टम् । अथवा कथं सर्वज्ञ एतन्न पश्यति । अवश्यमेतैर्दुष्टवृद्धस्थविरैर्निरुत्साहैरस्माकं तरुणजनानां मत्सरेण पिटकपुस्तकेषु स्त्रीसुरापानविधानानि परामृष्टानीति तर्कयामि । कुत्रनुखल्वविनष्टमूलपाठं समासादयेयम् । ततः सम्पूर्णं बुद्धवचनं लोके प्रकाशयन् सङ्घोपकारं करिष्यामि ।

---

१. 'वोधिअं' क. पाठः । २. 'वअणा' ख. पाठः ।

देवसोमा — (क) भअवं! पेक्ख पेक्ख। एसो रत्तपडो इमस्सिं विस्सत्थपुरिससम्पादे राअमग्गे सङ्कुइदसव्वङ्गो उभयपक्खसञ्चारिददिट्ठी सङ्किदपदविक्खेवो तुरिअतुरिअं गच्छइ।

कपाली — प्रिये! एवमेतत्। अपिचास्य हस्ते चीवरान्तःप्रच्छादितं किमप्यस्तीव।

देवसोमा — (ख) भअवं! तेण हि ओळम्बिअ आसादिअ जाणीमो।

कपाली — भवति! तथा। (उपगम्य) भो भिक्षो! तिष्ठ।

शाक्यभिक्षुः — (ग) कोणुखु मं एवं भणादि। (निरूप्यावलोक्य) अइ अयं एअंव्ववासी दुट्ठकवाळिओ। भोदु, इमस्स सुराविब्भमस्स ळक्खं ण होमि। (सत्वरं गच्छति।)

कपाली — प्रिये! हन्त लब्धं कपालम्। अस्य हि मद्दर्शनजनितभयात् त्वरैव चौर्यसाक्षित्वं प्रतिपन्ना। (द्रुतमुपगम्याग्रतो रुणद्धि।) आः धूर्त्त! केदानीं गमिष्यसि।

---

(क) भगवन्! पश्य पश्य। एष रक्तपटोऽस्मिन् विश्वस्तपुरुषसम्पाते राजमार्गे सङ्कुचितसर्वाङ्ग उभयपक्षसञ्चारितदृष्टिः शङ्कितपदविक्षेपस्त्वरितत्वरितं गच्छति।

(ख) भगवन्! तेन हि अवलम्ब्यासाद्य जानीवः।

(ग) कोनुखलु मामेवं भणति। अयि अयमेकाम्रवासी दुष्टकापालिकः। भवतु, अस्य सुराविभ्रमस्य लक्ष्यं न भवामि।

---

१. 'ओ', २. 'ओवळ', ३. 'त्वरिता ग' ख. पाठः.

शाक्यभिक्षुः —(क) कवालिआउस! मा मा एव्वं । किं एदं । (आत्मगतम्) अहो ललिअरूवा उवासिआ ।

कपाली — भो भिक्षो! दर्शय तावत् । यावदेतत् ते पाणौ चीवरान्तःप्रच्छादितं द्रष्टुमिच्छामि ।

शाक्यभिक्षुः —(ख) किं एत्थ पेक्खिदव्वं । भिक्खाभाअणं खु एदं ।

कपाली — अत एव द्रष्टुमिच्छामि ।

शाक्यभिक्षुः—(ग) आ, उस! मा मा एव्वं । पच्छण्णं खु एदं णेदव्वं ।

कपाली—नूनमेवमादिप्रच्छादननिमित्तं बहुचीवरधारणं बुद्धेनोपदिष्टम् ।

शाक्यभिक्षुः —(घ) सच्चं एदं ।

कपाली — इदं तत् संवृतसत्यम् । परमार्थसत्यं श्रोतुमिच्छामि ।

शाक्यभिक्षुः —(ङ) भोदु एत्तओ परिहासो । अदिक्कमादि भिक्खावेळा । साहेमि अहं । (प्रतिष्ठते ।)

---

(क) कापालिकोपासक! मा मैवम् । किमेतत् । अहो ललितरूपा उपासिका ।

(ख) किमत्र द्रष्टव्यम् । भिक्षाभाजनं खल्वेतत् ।

(ग) आः, उपासक! मा मैवम् । प्रच्छन्नं खल्वेतन्नेतव्यम् ।

(घ) सत्यमेतत् ।

(ङ) भवत्वेतावान् परिहासः । अतिक्रामति भिक्षावेला । साधयाम्यहम् ।

कपाली — आः, धूर्त्त! क्व गमिष्यसि । दीयतां मे कपालम् । (चीवरान्तमालम्बते।)

शाक्यभिक्षुः — (क) णमो बुद्धाअ ।

कपाली — नमः खरपटायेति वक्तव्यं, येन चोरशास्त्रं प्रणीतम् । अथवा खरपटादप्यस्मिन्नधिकारे बुद्ध एवाधिकः । कुतः,

वेदान्तेभ्यो गृहीत्वार्थान् यो महाभारतादपि ।
विप्राणां मिषतामेव कृतवान् कोशसञ्चयम् ॥ १२ ॥

शाक्यभिक्षुः — (ख) सन्तं पापं सन्तं पापं ।

कपाली — एवं सुवृत्तस्य तपस्विनः कथमिव पापं न शाम्यति ।

देवसोमा — (ग) भअवं! परिस्सन्तो विअ ळक्खीअसि । ण एदं सुहोवाअसुळहं कवाळं । ता एदिणा गोसिङ्गेण सुरं पिबिअ जादबळो भविअ इमिणा सह विवादं करेहि ।

कपाली — तथास्तु ।

(देवसोमा कपालिने सुरां प्रयच्छति।)

कपाली — (पीत्वा) प्रिये! त्वयापि श्रमापनोदः कर्तव्यः ।

देवसोमा — (घ) भअवं! तह । (पिबति।)

---

(क) नमो बुद्धाय ।

(ख) शान्तं पापं शान्तं पापम् ।

(ग) भगवन्! परिश्रान्त इव लक्ष्यसे । नैतत् सुखोपायसुलभं कपालम् । तदेतेन गोशृङ्गेण सुरां पीत्वा जातबलो भूत्वानेन सह विवादं कुरु ।

(घ) भगवन्! तथा ।

कपाली — अयमस्माकमपकारी । संविभागप्रधानः स्वसिद्धान्तः । शेषमाचार्याय प्रदीयताम् ।

देवसोमा — (क) जं भअवं आणवेदि । गह्णदु भअवं ।

शाक्यभिक्षुः — (आत्मगतम्) (ख) अहो सुहोवणदो अब्भुदओ । एत्तओ दोसो — महाजणो पेक्खिस्सदि । (प्रकाशम्) भोदि ! मा मा एवं । ण वड्ढदि अह्माणं । (सृक्कणी लेढि ।)

देवसोमा — (ग) धंस । कुदो दे एत्तिआणि भाअधेआणि ।

कपाली — प्रिये ! इयमस्येच्छाविरोधिनी वाग् मुखप्रसेकेन स्खल(य ?)ति ।

शाक्यभिक्षुः — (घ) इदाणिं वि णत्थि दे करुणा ।

कपाली — यद्यस्ति करुणा, कथं वीतरागो भविष्यामि ।

शाक्यभिक्षुः — (ङ) एवं वीदरागिणा वीदरोसेण वि होदव्वं ।

कपाली — वीतरोषो भविष्यामि, यदि मे स्वकं दास्यति ।

(क) यद् भगवानाज्ञापयति । गृह्णातु भगवान् ।

(ख) अहो सुखोपनतोऽभ्युदयः । एतावान् दोषः — महाजनो द्रक्ष्यति । भवति ! मा मैवम् । न वर्धतेऽस्माकम् ।

(ग) ध्वंसस्व । कुतस्ते एतावन्ति भागधेयानि ।

(घ) इदानीमपि नास्ति ते करुणा ।

(ङ) एवं वीतरागिणा वीतरोषेणापि भवितव्यम् ।

१. 'द्दई अ' क. पाठः.

शाक्यभिक्षुः — (क) किं दे सअं ।

कपाली — कपालम् ।

शाक्यभिक्षुः — (ख) कहं कवाळं ।

कपाली — कथं कपालमित्याह । अथवा युक्तमेतत् ।

दृष्टानि वस्तूनि महीसमुद्र-
महीधरादीनि महान्ति मोहात् ।
अपह्नुवानस्य सुतः कथं त्व-
मल्पं न निह्नोतुमलं कपालम् ॥ १३ ॥

देवसोमा — (ग) भअवं! केवळं ळाळीयमाणो ण दइस्सदि । ता एदस्स हत्थादो आच्छिन्दिअ गच्छामो ।

कपाली — प्रिये! तथा । (आच्छेत्तुं व्याप्रियते ।)

शाक्यभिक्षुः — (घ) धंस दुट्ठकवाळिअ! । (हस्तेन नुदन् पादेन ताडयति ।)

कपाली — कथं पतितोऽस्मि ।

---

(क) किं ते स्वकम् ।

(ख) कथं कपालम् ।

(ग) भगवन्! केवलं लाल्यमानो न दास्यति । तदेतस्य हस्तादाच्छिद्य गच्छावः ।

(घ) ध्वंसस्व दुष्टकापालिक!

**देवसोमा**—(क) मुदो सि दासीएवुत्त ! । (केशापकर्षणं रूपयित्वा निरालम्बना पतिता । )

**शाक्यभिक्षुः**—(आत्मगतम् ) (ख) अघं बुद्धस्स विण्णाणं, जेण मुण्डणं दिट्ठं[1] । (प्रकाशम् ) उट्ठेहि उट्ठेहि उसिए ! उट्ठेहि । (इति देवसोमामुत्थापयति । )

**कपाली**—पश्यन्तु पश्यन्तु माहेश्वराः अनेन दुष्टभिक्षुनामधारकेण नागसेनेन मम प्रियतमापाणिग्रहणं क्रियमाणम् ।

**शाक्यभिक्षुः**—(ग) आ वुस ! मा मा एवं । धम्मो खु अह्माणं विसमपदिदाणुकम्पा ।

**कपाली**— किमयमपि सर्वज्ञधर्मः । नन्वहं पूर्वं पतितोऽस्मि । भवतु, किमनेन । इदानीं तव शिरःकपालं मम भिक्षाकपालं भविष्यति ।

(सर्वे कलहं रूपयन्ति । )

**शाक्यभिक्षुः**—(घ) दुक्खं दुक्खं ।

**कपाली**—पश्यन्तु पश्यन्तु माहेश्वराः । एष दुष्टभिक्षुनामधारको मम भिक्षाकपालं मुषित्वा स्वयमेवाक्रन्दति । भवतु, अहमप्याक्रोशयिष्ये । अब्रह्मण्यम् अब्रह्मण्यम् ।

---

(क) मृतोऽसि दास्याःपुत्र ! ।

(ख) अहं (अर्घं वा) बुद्धस्य विज्ञानं, येन मुण्डनं दृष्टम् । उत्तिष्ठोत्तिष्ठ उपासिके उत्तिष्ठ ।

(ग) आ उपासक ! (आयुष्मन् ! वा) मा मैवम् । धर्मः खल्वस्माकं विषमपतितानुकम्पा ।

(घ) दुःखं दुःखम् ।

१. 'किदं । ' क. पाठः.

(ततः प्रविशति पाशुपतः ।)

पाशुपतः— सत्यसोम! किमर्थमाक्रन्दसि ।

कपाली — भो बभ्रुकल्प! अयं दुष्टभिक्षुनामधारको नागसेनो मम भिक्षाकपालं चोरयित्वा दातुं नेच्छति ।

पाशुपतः — (आत्मगतम्) यदस्माभिरनुष्ठेयं, गन्धर्वैः तदनुष्ठितम् । एष दुरात्मा,

तां क्षौरिकस्य दासीं मम दयितां चीवरान्तदर्शितया ।
आकर्षति काकण्या बहुशो गां ग्रासमुष्टयेव ॥ १४ ॥

तदिदानीं प्रतिहस्तिप्रोत्साहनेन शत्रुपक्षं ध्वंसयामि । (प्रकाशम्) भो नागसेन! अप्येवमेतद्, यथायमाह ।

शाक्यभिक्षुः —(क) भअवं! तुवं पि एवं भणासि । अदिण्णादाणा वेरमणं सिक्खापदं । मुधावादा वेरमणं सिक्खापदं । अब्बम्हचय्या[1] वेरमणं सिक्खापदं । पाणादिपादा वेरमणं सिक्खापदं[2] । अकाळभोअणा वेरमणं सिक्खापदं । अह्माअं बुद्धधम्मं सरणं गच्छामि ।

पाशुपतः — सत्यसोम! ईदृश एषां समयः । किमत्र प्रतिवचनम् ।

(क) भगवन् ! त्वमप्येवं भणसि । अदत्तादानाद्विरमणं शिक्षापदम् । मृषावादाद्विरमणं शिक्षापदम् । अब्रह्मचर्याद्विरमणं शिक्षापदम् । प्राणातिपाताद्विरमणं शिक्षापदम् । अकालभोजनाद्विरमणं शिक्षापदम् । अस्माकं बुद्धधर्मं शरणं गच्छामि ।

१. 'म्हञ्चच', २. 'दं । भोअणकाळत्थेरावे' क. पाठः.

कपाली — नन्वस्माकमनृतं न वक्तव्यमिति समयः ।

पाशुपतः — उभयमप्युपपन्नम् । कोऽत्र निर्णयोपायः ।

शाक्यभिक्षुः — (क) बुद्धवअणं पमाणीकरअन्तो भिक्खू सुराभाअणं गण्हादि त्ति को एत्थ हेदू ।

पाशुपतः — नहि प्रतिज्ञामात्रेण हेतुवादिनः सिद्धिरस्ति ।

कपाली — प्रत्यक्षे हेतुवचनं निरर्थकम् ।

पाशुपतः — कथं प्रत्यक्षमेव ।

देवसोमा — (ख) भअव ! एदस्स हत्थे चीवरान्तप्पच्छादिदं कवाळं ।

पाशुपतः — श्रुतं भवता ।

शाक्यभिक्षुः — (ग) भो भअवं ! एदं कवाळं ण परकेरअं ।

कपाली — तेन हि दर्शय तावत् ।

शाक्यभिक्षुः — (घ) तह । (दर्शयति ।)

कपाली — पश्यन्तु पश्यन्तु माहेश्वराः कापालिकेन[1] कृतमन्याय्यमस्य भदन्तस्य साधुवृत्ततां च ।

---

(क) बुद्धवचनं प्रमाणीकुर्वन् भिक्षुः सुराभाजनं गृह्णातीति कोऽत्र हेतुः ।

(ख) भगवन् ! एतस्य हस्ते चीवरान्तःप्रच्छादितं कपालम् ।

(ग) भो भगवन् ! एतत् कपालं न परकीयम् ।

(घ) तथा ।

---

१. 'कपालिने कृ' क. पाठः.

**शाक्यभिक्षुः**—(क) अदिण्णादाणा वेरमणं सिक्खापदं *(इति पुनस्तदेव पठति।)

(उभौ नृत्यतः।)

**शाक्यभिक्षुः**—(ख) हद्धि। ळज्जिदव्वे काळे णच्चदि।

**कपाली**—आः को नृत्यति। (सर्वतो विलोक्य) आ मम नष्टभिक्षाभाजनदर्शनकुतूहलमलयानिलप्रयुक्ताया ध्रुवमस्य नृत्तबुद्धिः प्रीतिलताया विलसितेषु।

**शाक्यभिक्षुः**—(ग) भअवं! केण कारणेण एदं ण ळक्खीअदि। भो! आचिक्खदु [1]भअवं। इमस्स अअं वण्णो।

**कपाली**—किमत्र वक्तव्यम्। ननु मया दृष्टम्। काकादपि कृष्णमिदं कपालम्।

**शाक्यभिक्षुः**—(घ) तेण हि एदं ममकेरअं ति सअं एव अब्भुवगदं।

**कपाली**—सत्यमभ्युपगतं तव वर्णान्तरकरणे नैपुण्यम्। पश्य,

---

(क) अदत्तादानाद्विरमणं मुनिशिक्षापदम्।

(ख) हा धिक्। लज्जितव्ये काले नृत्यति।

(ग) भगवन्! केन कारणेनैतन्न लक्ष्यते। भोः! आचष्टां भगवान्। अस्यायं वर्णः।

(घ) तेन ह्येतन्मदीयमिति स्वयमेवाभ्युपगतम्।

---

१. 'भवं' ख. पाठः.

---

* पूर्वोक्तं सर्वं पुनर्लिखितं क. ग्रन्थे, पुनरित्यादि न लिखितं च।

यदेतदासीत् प्रथमं स्वभावतो
मृणालभङ्गच्छविचोरमम्बरम् ।
ननु त्वया नीतमचिन्त्यकर्मणा
तदेव बालारुणरागताम्रताम् ॥ १५॥

अपिच,

आवृतं बहिरन्तश्च कषायेणानपायिना ।
त्वां प्राप्तं स्यात् कथं नाम कपालमकषायितम्॥ १६॥

देवसोमा — (क) हा हदह्मि मन्दभाआ । सव्वलक्खणसम्पण्णदाए कमलासणसीसकवालाणुभावस्स पुण्णमासिसोमदंसणस्स णिच्चसुरागन्धिणो एदस्स मलिणपडसंसग्गेण इअ ईदिसी अवत्था संवुत्ता । (इति रोदिति ।)

कपाली — प्रिये! अलमलं सन्तापेन । पुनः शुचिर्भविष्यति । श्रूयन्ते हि महान्ति भूतानि प्रायश्चित्तैरपनीतकल्मषाणि भवन्ति । तथाहि —

आस्थाय प्रयतो महाव्रतमिदं बालेन्दुचूडामणिः
स्वामी नो मुमुचे पितामहशिरश्छेदोद्भवादेनसः ।
नाथोऽपि त्रिदिवौकसां त्रिशिरसं त्वष्टुस्तनूजं पुरा
हत्वा यज्ञशतेन शान्तदुरितो भेजे पुनः पुण्यताम्॥ १७॥

भो बभ्रुकल्प! नन्वेवमेतत् ।

---

(क) हा हतास्मि मन्दभागा। सर्वलक्षणसम्पन्नतया कमलासनशीर्षकपालानुभावस्य पौर्णमासीसोमदर्शनस्य नित्यसुरागन्धिन एतस्य मलिनपटसंसर्गेणेयमीदृश्यवस्था संवृत्ता ।

पाशुपतः — आगमानुगतमभिहितम् ।

शाक्यभिक्षुः — (क) भो ! वण्णो दाव मए किदो । इमस्स सण्ठाणपरिमाणं केण णिम्मिदं ।

कपाली — ननु मायासन्तानसम्भवाः खलु भवन्तः ।

शाक्यभिक्षुः — (ख) केत्तिअं वेळं भवन्तं अक्कोसामि । गण्हदु भअवं ।

कपाली — नूनमेवं बुद्धेनापि दानपारमिता पूरिता ।

शाक्यभिक्षुः — (ग) एवं गदे किं दाणिं मे सरणं ।

कपाली — ननु बुद्धधर्मसङ्घाः ।

पाशुपतः — नायं व्यवहारो मया परिच्छेत्तुं शक्यते । तदधिकरणमेव यास्यामः ।

देवसोमा — (घ) भअवं ! जइ एवं, णमो कवाळस्स ।

पाशुपतः — कोऽभिप्रायः ।

देवसोमा — (ङ) एसो उण अणेअविहारभोअसमधिगदवित्तसञ्चओ जहाकामं अधिकरणकारुणिआणं मुहाणि

---

(क) भोः ! वर्णस्तावन्मया कृतः । अस्य संस्थानपरिमाणं केन निर्मितम् ।

(ख) कियतीं वेलां भवन्तमाक्रोशामि । गृह्णातु भगवान् ।

(ग) एवं गते किमिदानीं मे शरणम् ।

(घ) भगवन् ! यद्येवं, नमः कपालाय ।

(ङ) एष पुनरनेकविहारभोगसमधिगतवित्तसञ्चयो यथाकाममधिकरणकारुणिकानां मुखानि पूरयितुं पारयति । अस्माकं पुनरहिचर्मभूतिमात्रविभ-

पूरेदुं पारेदि । अह्माअं पुण अहिचम्मभूदिमत्तविभवस्स दरिद्दकवालिअस्स परिआरिआणं को एत्थ विभवो अधिकरणं पविसिदुं ।

**पाशुपतः** — नैतदेवम् ।

अजिह्मैः सारगुरुभिः स्थिरैः श्लक्ष्णैः सुजन्मभिः।
तैर्धर्मो धार्यते स्तम्भैः प्रासाद इव साधुभिः ॥१८॥

**कपाली** — कृतमनेन । कुतश्चिदपि न्याय्यवृत्तेर्भयं नास्ति ।

**शाक्यभिक्षुः** — (क) भो भअवं! तुमं दाव अग्गदो हो(दु ? हि) ।

**पाशुपतः** — बाढम् ।

(सर्वे परिक्रामन्ति ।)

(ततः प्रविशत्युन्मत्तकः ।)

**उन्मत्तकः** — (ख) एशे एशे दुट्ठकुक्कुळे। शुळ्ळमंशगब्भं कवाळं गण्हिअ धावशि । दाशीएपुत्त! कहिं गमिश्शशि । एशे दाणिं कवाळं णिक्खिविअ मं खायिदुकामो अहिमुहं आहावइ । (दिशो विलोक्य ।) इमिणा पत्थळेण दन्ताणि शे भंजिश्शं । कहं कवाळं उज्झिअ पळाअशि । उम्मत्ते दुट्ठकु-

---

वस्य दरिद्रकापालिकस्य परिचारिकाणां कोऽत्र विभवोऽधिकरणं प्रवेष्टुम्।

(क) भो भगवन्! त्वं तावदग्रतो भव ।

(ख) एष एष दुष्टकुक्कुरः। शूल्यमांसगर्भं कपालं गृहीत्वा धावसि। दास्याः-पुत्र! कुत्र गमिष्यसि । एष इदानीं कपालं निक्षिप्य मां खादितुकामोऽभिमुखमाधावति। अनेन प्रस्तरेण दन्तानस्य भङ्क्ष्यामि। कथं कपालमुज्झित्वा पला-

---

१. 'यं', २. 'ढम् । प्रथमः कल्पः ।' ख पाठः.

क्कुळे ईदिशेण णाम शूळत्तणेण मए शह वि ळोशं कळेशि। गामशूगळं आळुहिअ गगणमुप्पदिदेण शागळेण पडिभञ्जिअ ळावणं बळा गहीदे शक्कशुदे तिमिङ्गळे। अइ एळण्डळुक्ख! किं भणाशि — अळिअं अळिअं त्ति। णं एशे मुशळशमविशाळळम्बहत्थे दद्दुळे मे शक्खी। अहव तेळ्ळोक्कविदिअपळक्कमश्श शक्खिणा किं कय्यं। एवं कळिश्शं। कुक्किळखादिअशेशं मंशखण्डं खादिश्शं। (खादन् भ्रान्तः।) हा हा माळिदो म्हि बप्फेण माळिदो म्हि। (रुदित्वा विलोक्य) के एशे मं ताळेशि। (विलोक्य) दुट्ठदाळआ! जश्श वा कश्श वा भाउणेओ खु अहं, भीमशेणश्श घटुक्कओ विअ। अविअ शुणाथ,

गहीदशूळा बहुवेशधाळिणो
शदं पिशाआ उदळे वहन्ति मे।
शदं च वग्घाण णिशग्गभीशणं
मुहेण मुञ्चामि अहं महोळए॥ १९॥

---

यसे। उन्मत्तो दुष्टकुक्कुर ईदृशेन नाम शूरत्वेन मया सहापि रोषं करोषि। ग्रामसूकरमारुह्य गगनमुत्पतितेन सागरेण प्रभञ्ज्य रावणं बलाद् गृहीतः शक्रसुतस्तिमिङ्गिलः। अयि एरण्डवृक्ष! किं भणसि — अलीकमलीकमिति। नन्वेष मुसलसमविशाललम्बहस्तो दर्दुरो मे साक्षी। अथवा त्रैलोक्यविदितपराक्रमस्य साक्षिणा किं कार्यम्। एवं करिष्यामि। कुक्कुरखादितशेषं मांसखण्डं खादिष्यामि। हा हा मारितोऽस्मि बाष्पेण मारितोऽस्मि। क एष मां ताडयसि। दुष्टदारकाः! यस्य वा कस्य वा भागिनेयः खल्वहं, भीमसेनस्य घटोत्कच इव। अपिच शृणुथ,

गृहीतशूला बहुवेषधारिणः
शतं पिशाचा उदरे वहन्ति मे।
शतं च व्याघ्राणां निसर्गभीषणं
मुखेन मुञ्चाम्यहं महोरगान्॥ १९॥

कहं मं बाहन्ति । पशीदन्तु पशीदन्तु दाळअभट्टा । इमश्श मंशखण्डश्श काळणादो मा मं बाहेह । (अग्रतो विलोक्य) एशे खु अम्हाणं आआळिए शूळनन्दी । जाव णं उवशप्पामि । (इति धावति ।)

**पाशुपतः**— अये ! अयमुन्मत्तकः इत एवाभिवर्तते । य एषः,

निर्विष्टोज्झितचित्रचीवरधरो रूक्षैर्नितान्ताकुलैः
केशैरुद्धतभस्मपांसुनिचयैर्निर्माल्यमालाकुलैः ।
उच्छिष्टाशनलोलुपैर्बलिभुजामन्वास्यमानो गणै-
र्भूयान् ग्रामकसारसञ्चय इव भ्राम्यन् मनुष्याकृतिः ॥

**उन्मत्तकः**— (क) जाव णं उवशप्पामि । (उपसृत्य) महाशाहुणो चण्डाळकुक्कुळश्श शआशादो अहिअदं एदं कवाळं पडिगण्हदु भअवं ।

**पाशुपतः**— (सदृष्टिक्षेपम्) पात्रे प्रतिपाद्यताम् ।

**उन्मत्तकः**— (ख) महाबम्हण ! कळिअदु पशादो ।

**शाक्यभिक्षुः**— (ग) एसो महापासुवदो एदस्स जोग्गो ।

---

कथं मां बाधन्ते । प्रसीदन्तु प्रसीदन्तु दारकभर्तारः । अस्य मांसखण्डस्य कारणाद् मा मां बाधध्वम् । एष खल्वस्माकमाचार्यः शूरनन्दी । यावदेनमुपसर्पामि ।

(क) यावदेनमुपसर्पामि । महासाधोश्चण्डालकुक्कुरस्य सकाशादधिगतमेतत् कपालं प्रतिगृह्णातु भगवान् ।

(ख) महाब्राह्मण ! क्रियतां प्रसादः ।

(ग) एष महापाशुपत एतस्य योग्यः ।

**उन्मत्तकः** — (कपालिनमुपगम्य कपालं भूमौ निक्षिप्य प्रदक्षिणीकृत्य पादयोः पतित्वा) (क) महादेव! कळीअदु पशादो । एशो दे अञ्जळी ।

**कपाली** — अस्मदीयं कपालम् ।

**देवसोमा** — (ख) एवं एदं ।

**कपाली** — भगवत्प्रसादात् पुनरपि कपाली संवृत्तः । (ग्रहीतुमिच्छति ।)

**उन्मत्तकः** — (ग) दाशीएपुत्त! विशं खादेहि । (कपालमाच्छिद्य गच्छति ।)

**कपाली** — (अनुसृत्य) एष यमपुरुषो मे जीवितं हरति । अभ्यवपद्येतां भवन्तौ ।

**उभौ** — (घ) होदु । अम्हे दे सहाआ होम ।

(सर्वे रुन्धन्ति ।)

**कपाली** — भोः! तिष्ठ तिष्ठ ।

**उन्मत्तकः** — (ङ) किश्श मं ळुन्धन्ति ।

**कपाली** — अस्मदीयं कपालं दत्त्वा गम्यताम् ।

**उन्मत्तकः** — (च) मूढ! किं ण पेक्खशि, शुवण्णभाअणं खु एदं ।

---

(क) महादेव! क्रियतां प्रसादः । एष तेऽञ्जलिः ।

(ख) एवमेतत् ।

(ग) दास्याःपुत्र! विषं खाद ।

(घ) भवतु । आवां ते सहायौ भवावः ।

(ङ) कस्मान्मां रुन्धन्ति ।

(च) मूढ! किं न पश्यसि, सुवर्णभाजनं खल्वेतत् ।

**कपाली** — एवंविधं सुवर्णभाजनं केन कृतम् ।

**उन्मत्तकः** — (क) एदिणा शुवण्णवण्णपडावुदेण शुवण्णकारावुत्तएण किदं त्ति भवअं! शुवण्णभाअणं त्ति भणामि ।

**शाक्यभिक्षुः** — (ख) किं भणासि ।

**उन्मत्तकः** — (ग) शुवण्णभाअणं त्ति ।

**शाक्यभिक्षुः** — (घ) किमअं उम्मत्तओ ।

**उन्मत्तकः** — (ङ) उम्मत्तओ त्ति बहुशो एदं शद्दं शुणोमि । एदं गण्हिअ दळिशेहि उम्मत्तअं । (कपालिने कपालं प्रयच्छति । )

**कपाली** — (कपालं गृहीत्वा ) अयमिदानीं कुड्येनान्तर्हितः । शीघ्रमनुगम्यताम् ।

**उन्मत्तकः** — (च) ळद्धप्पशादे ह्मि ।

(निष्क्रान्तो जवेनोन्मत्तकः ।)

**शाक्यभिक्षुः** — (छ) अहो अच्छरिअं । परवक्खस्स ळाभेण अहं परितुट्ठो ह्मि ।

---

(क) एतेन सुवर्णवर्णपटावृतेन सुवर्णकारावुत्तेन कृतमिति भगवन्! सुवर्णभाजनमिति भणामि ।

(ख) किं भणसि ।

(ग) सुवर्णभाजनमिति ।

(घ) किमयमुन्मत्तकः ।

(ङ) उन्मत्तक इति बहुश एतं शब्दं शृणोमि । एतद् गृहीत्वा दर्शयोन्मत्तकम् ।

(च) लब्धप्रसादोऽस्मि ।

(छ) अहो आश्चर्यम् । परपक्षस्य लाभेनाहं परितुष्टोऽस्मि ।

कपाली — (कपालं परिष्वज्य)

चिरं मया चरितमखण्डितं तपो
महेश्वरे भगवति भक्तिरस्ति मे ।
तिरोहितः स तु सहसा सुखेन न-
स्त्वमद्य यत् कुशलि कपाल! दृश्यसे ॥ २१ ॥

देवसोमा — (क) भअवं! चन्दसमागदं विअ पओसं भअवन्तं पेक्खन्तीए अज्ज आणन्ददी विअ मे दिट्ठी ।

पाशुपतः — दिष्ट्या भवान् वर्धते ।

कपाली — नन्वभ्युदयो भवतामेव ।

पाशुपतः — (आत्मगतम्) सत्यमेतत् — नास्त्यदोषवतां भयमिति, यदयमद्य भिक्षुर्व्याघ्रमुखात् परिभ्रष्टः । (प्रकाशम्) यावदहमिदानीमेव सुहृदभ्युदयकृतमानन्दं पुरोधाय भगवतः पूर्वस्थलीनिवासिनो[१] धूमवेलां प्रतिपालयामि । अयं चाद्यप्रभृति,

विरोधः पूर्वसम्बद्धो युवयोरस्तु शाश्वतः ।
परस्परप्रीतिकरः किरातार्जुनयोरिव ॥ २२ ॥

(निष्क्रान्तः पाशुपतः ।)

कपाली — भो नागसेन! यन्मयापराधः कृतः, तत् प्रसन्नहृदयं त्वामिच्छामि ।

(क) भगवन्! चन्द्रसमागतमिव प्रदोषं भगवन्तं पश्यन्त्या अद्यानन्दतीव मे दृष्टिः ।

१. 'वें' क. पाठः.

शाक्यभिक्षुः—(क) किं एदं पि अब्भत्थणीअं । किं दे पिअं करेमि ।

कपाली—यदि मे भगवान् प्रसन्नः, किमतः परमहमिच्छामि ।

शाक्यभिक्षुः—(ख) गच्छामि दाव अहं ।

कपाली—गच्छतु भवान् पुनर्दर्शनाय ।

शाक्यभिक्षुः—(ग) तह होदु । (निष्क्रान्तः । )

कपाली—प्रिये देवसोमे! गच्छावस्तावत् ।

( भरतवाक्यम् )

शश्वद् भूत्यै प्रजानां वहतु विधिहुतामाहुतिं जातवेदा
वेदान् विप्रा भजन्तां सुरभिदुहितरो भूरिदोहा भवन्तु ।
उद्युक्तः स्वेषु धर्मेष्वयमपि विगतव्यापदाचन्द्रतारं
राजन्वानस्तु शक्तिप्रशमितारिपुणा शत्रुमल्लेन लोकः ॥ २३ ॥

( निष्क्रान्तौ । )

मत्तविलासप्रहसनं समाप्तम् ।

---

शुभं भूयात् ।

---

(क) किमेतदप्यभ्यर्थनीयम् । किं ते प्रियं करोमि ।

(ख) गच्छामि तावदहम् ।

(ग) तथा भवतु ।

# श्लोकानुक्रमणी



---

# READY FOR SALE.

| | RS. | AS. | P. |
|---|---|---|---|
| भक्तिमञ्जरी (Stuti) by H. H. Svâti Srî Râma Varma Mahârâjah. | 1 | 0 | 0 |

## Trivandrum Sanskrit Series.

| | | | |
|---|---|---|---|
| No. 1—दैवम् (Vyâkarana) by Deva with Purushakâra of Krishnalîlâsukamuni. | 1 | 0 | 0 |
| No. 2—अभिनवकौस्तुभमाला-दक्षिणामूर्तिस्तवौ by Krishnalîlâsukamuni. | 0 | 2 | 0 |
| No. 3—नलाभ्युदयः (Kâvya) by Vâmana Bhatta Bâna. | 0 | 4 | 0 |
| No. 4—शिवलीलार्णवः (Kâvya) by Nîlakantha Dîkshita | 2 | 0 | 0 |
| No. 5—व्यक्तिविवेकः (Alankâra) by Mahima Bhatta with commentary. | 2 | 12 | 0 |
| No. 6—दुर्घटवृत्तिः (Vyâkarana) by Saranadeva. | 2 | 0 | 0 |
| No. 7—ब्रह्मतत्त्वप्रकाशिका (Vedânta) by Sadâsivendra Sarasvatî | 2 | 4 | 0 |
| No. 8—प्रद्युम्नाभ्युदयम् (Nâtaka) by Ravi Varma Bhûpa | 1 | 0 | 0 |
| No. 9—विरूपाक्षपञ्चाशिका (Vedânta) by Virûpâkshanâtha with the commentary of Vidyâchakravartin. | 0 | 8 | 0 |
| No. 10—मातङ्गलीला (Gajalakshana) by Nîlakantha. | 0 | 8 | 0 |
| No. 11—तपतीसंवरणम् (Nâtaka) by Kulasekhara Varma with the commentary of Sivarâma. | 2 | 4 | 0 |
| No. 12—परमार्थसारम् (Vedânta) by Bhagavad Âdisesha with the commentary of Râghavânanda. | 0 | 8 | 0 |
| No. 13—सुभद्राधनञ्जयम् (Nâtaka) by Kulasekhara Varma with the commentary of Sivarâma | 2 | 0 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 14—नीतिसारः (Nîti) by Kâmandaka, with the commentary of Sankarârya. | 3 | 8 | 0 |
| No. 15—स्वप्नवासवदत्तम् (Nâtaka) by Bhâsa. (Second Edition) | 1 | 8 | 0 |
| No. 16—प्रतिज्ञायौगन्धरायणम् (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 17—पञ्चरात्रम् Do. Do. | 1 | 0 | 0 |
| No. 18—नारायणीयम् (Stuti) by Nârâyana Bhatta with the commentary of Desamangala Vârya. | 4 | 0 | 0 |
| No. 19—मानमेयोदयः (Mîmâmsâ) by Nârâyana Bhatta and Nârâyana Pandita. | 1 | 4 | 0 |
| No. 20—अविमारकम् (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 21—बालचरितम् Do. Do. | 1 | [illegible] | 0 |
| No. 22—मध्यमव्यायोग-दूतवाक्य-दूतघटोत्कच-कर्णभारोरुभङ्गानि (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 23—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (Part I, 1 & 2 Kândas) | 1 | 12 | 0 |
| No. 24—जानकीपरिणयः (Kâvya) by Chakrakavi. | 1 | 0 | 0 |
| No. 25—काणादसिद्धान्तचन्द्रिका (Nyâya) by Gangâdharasûri. | 0 | 12 | 0 |
| No. 26—अभिषेकनाटकम् (Nâtaka) by Bhâsa. | 0 | 12 | 0 |
| No. 27—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (Part I, 1 & 2 Sargas) | 1 | 12 | 0 |
| No. 28—वैखानसधर्मप्रश्नः (Dharmasûtra) by Vikhanas. | 0 | 8 | 0 |
| No. 29—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (Part II, 3rd Kânda) | 2 | 4 | 0 |
| No. 30—वास्तुविद्या (Silpa) | 0 | 12 | 0 |
| No. 31—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (Part III. 4th, 5th & 6th Kândas) | 1 | 0 | 0 |

| | RS. | AS. | P |
|---|---|---|---|
| No. 32—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (Part II, 3rd, 4th & 5th Sargas) | 2 | 8 | 0 |
| No. 33—वाररुचसंग्रहः (Vyâkarana) with the commentary Dîpaprabhâ of Nârâyana | 0 | 8 | 0 |
| No. 34—मणिदर्पणः (शब्दपरिच्छेदः) (Nyâya) by Râjachûdâmanimakhin. | 1 | 4 | 0 |
| No. 35—मणिसारः (अनुमानखण्डः) (Nyâya) by Gopînâtha. | 1 | 8 | 0 |
| No. 36—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (Part III, 6th, 7th & 8th Sargas) | 3 | 0 | 0 |
| No. 37—आशौचाष्टकम् (Smriti) by Vararuchi with the commentary. | 0 | 4 | 0 |
| No. 38—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the commentary Tîkâsarvasva of Vandyaghatîya Sarvânanda (Part I 1st Kânda) | 2 | 0 | 0 |
| No. 39—चारुदत्तम् (Nâtaka) by Bhâsa. | 0 | 12 | 0 |
| No. 40—अलङ्कारसूत्रम् (Alankâra) by Râjânaka Srî Ruyyaka with the Alankârasarvaswa of Sri Mankhuka and its commentary by Samudrabandha. | 2 | 8 | 0 |
| No. 41—अध्यात्मपटलम् (Kalpa) by Âpastamba with Vivarana of Srî Sankara Bhagavat Pada | 0 | 4 | 0 |
| No. 42—प्रतिमानाटकम् (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 43—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the two commentaries, Amarakosodghatana of Kshiraswamin and Tîkasarvaswa of Vandyaghatiya-Sarvananda (Part II, 2nd Kanda 1-6 Vargas) | 2 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 44—तन्त्रशुद्धम् (Tantra) by Bhattâraka Srî Vedottama. | 0 | 4 | 0 |
| No. 45—प्रपञ्चहृदयम् (Prapanchahridaya) | 1 | 0 | 0 |
| No. 46—परिभाषावृत्तिः (Vyâkarana) by Nîlakantha Dîkshita. | 0 | 8 | 0 |
| No. 47—सिद्धान्तसिद्धाञ्जनम् (Vedânta) by Srî Krishnânanda Sarasvati. (Part I) | 1 | 12 | 0 |
| No. 48— Do. Do. (Part II) | 2 | 0 | 0 |
| No. 49—गोलदीपिका (Jyotisha) by Parameswara. | 0 | 4 | 0 |
| No. 50—रसार्णवसुधाकरः ( Alankara ) by Singa Bhûpala. | 3 | 0 | 0 |
| No. 51—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the two commentaries, Amarakosodghâtana of Kshîraswâmin and Tîkâsarvaswa of Vandyaghatîya Sarvananda (Part III, 2nd Kanda 7 -10 Vargas) | 2 | 0 | 0 |
| No. 52—नामलिङ्गानुशासनंम् (Kosa) by Amarasimha with the commentary Tîkâsarvaswa of Vandyaghatîya Sarvananda (Part IV, 3rd Kanda) | 1 | 8 | 0 |
| No. 53—शाब्दनिर्णयः (Vedanta) by Prakasatmayatîndra. | 0 | 12 | 0 |
| No. 54--स्फोटसिद्धिन्यायविचारः (Vyakarana) | 0 | 4 | 0 |
| No. 55—मत्तविलासप्रहसनम् (Nataka) by Sri Mahendravikramavarman | 0 | 8 | 0 |

*Apply to:—*

*The Agent for the sale of*
*Government Sanskrit Publications,*
*Trivandrum,*

